श्रीशिव उवाच ।। जगद्वश्यं महायन्त्रं शृणु देवि सुशोभनं । कर्पूरं मृगनाभिश्च चन्दनं रोचनं तथा ।। १ ।। जातीकाष्ठेन संलेख्यं भूर्जपत्रे प्रयत्नतः । प्रणवं च वकारं च जें ह्ली डं तथैव च ।। २ ।। पूर्वपंक्तौ तु संलेख्यं ताराद्यं बीजपञ्चकम् । दैं डं ह्लीं प्रणवं चैव डंकारं च तथैव च ।।३। द्वितीयपंक्तौ संलेख्यं यत्नतो बीजपञ्चकम् । तृतीयपंक्तौ संलेख्यं वंकारं तदनंतरम्।।४।।डंकारं च जगन्नाम वंकारं तदनन्तरम्। ह्लींकारश्च ततश्चान्ते एवं वै बीजपञ्चकम् ।।५ ।। तथापि विलिखेन्नूनं ऊंकारं तु चतुर्थकम्। एवं बीजानि संलेख्य चतुःकोणं तु कारयेत् । ६ ।। द्विरेखया महाकार्यं जगद्वश्यकरं परम् । पूजयेत्त्रिदिनं देवि सुगन्धैः सुमनोहरैः ।। ७ ।। त्रिलोहवेष्टितं कृत्वा धारयेद्बाहुमध्यतः । जगद्वश्यं भवेत्तस्य यन्त्रं यावत्तु तिष्ठति ।। ८ ।। संपूज्य नित्यमेवादौ यन्त्रं देवार्चनादिषु ।। ९ ।। इति श्रीय०चि०म०प्र०उ०तृ०व०दा०जगद्वश्यं त्रयोदशं यन्त्रम्।।१३

जगद्वश्यकरं यन्त्रम्




---

श्री शंकरजी बोले–हे देवि ! जगत्के वश्यकारक अतिशोभायमान यंत्रको श्रवण करो । उसका विधान यह है– दो रेखायुक्त एक चौकोर यंत्रको भोजपत्रके ऊपर चमेलीकी लकड़ीकी कलम बनाकर, केशर, कस्तूरी, लालचन्दन, गोरोचनसे लिखकर उक्त यंत्रके भीतर तीन तिरछी रेखा खींचकर पहली रेखामें , वं, जें, ह्लीं, डं; दूसरी रेखामें दैं, डं, ल्हीं, ओं, डं; तीसरी रेखामें वं, डं, जगत् वं, ऊं, ह्लीं बीजोंको लिखे । तत्पश्चात् तीन दिनतक गन्ध पुष्पादिसे पूजनकर त्रिलोहमें बन्दकर भुज दंडमें धारण करे तो जबतक यह यन्त्र बँधा रहेगा तबतक जगत् वश्य रहेगा । परंतु प्रथम देवता आराधनके समय प्रतिदिन नियमपूर्वक यन्त्रका पूजन करना आवश्यक है ।। १–९ ।। इति त्रयोदशं यन्त्रम् ।।१३।।

श्रीशिव उवाच ।। यदा स्वभृत्यः क्रुद्धः सन्मर्म सर्वं प्रकाशते । न शक्यते निराकर्तुं देशकालबलेन च ।। १ ।। तदा तन्मोहनार्थाय स्वकीयार्थस्य सिद्धये । यन्त्रं पिशाचिकानाम कर्तव्यं सुविचक्षणैः ।।२।। साध्यनाम लिखित्वा तु वर्तुलं वेष्टयेत्ततः । चतुर्दलं प्रकर्तव्यं बीजयुक्तं मनोहरम् ।।३।। ह्रीं काराश्चतुरो लेख्या दलमध्ये चतुर्दिशम् । रोचना भूर्जपत्रे तु लेखन्या विलिखेन्नरः ।४ । संपूज्य गन्धपुष्पाद्यैर्धूपैर्नानाविधैरपि । ततस्तद्दभिमध्ये तु क्षिपेद्यन्त्रवरं शुभे ।। ५ ।। स वश्यो जायते नूनं यन्त्रराजप्रसादतः ।। यन्त्रं पिशाचिकं नाम भृत्यवश्यकरं परम् ।। ६ ।। न देयं यस्यकस्यापि स्वयं रुद्रेण भाषितम् ।। ७ ।।

पिशाचियन्त्रम्




इति यं०चि० भृत्यवश्यकरं पिशाचिसंज्ञं चतुर्दशं यन्त्रम् ।।१४।।

---

श्रीशिवजी बोले, हे प्रिये ! यदि सेवक क्रुद्ध होकर स्वामी के मर्म को प्रकाशितकर नाश करनेके यत्नमें उद्यत हो और देशकालके वशसे स्वामी उसे किसी प्रकार निषेध भी न कर सके, तब उसके वश्यके लिये एक वर्तुल चक्र भोजपत्रके ऊपर गोरोचनसे खींचकर पूर्वादि चारों दिशाओंमें कमल दलसे युक्तकर चक्रके भीतर सेवकके नामके अक्षरोंको लिखे । पूर्वादि चारों दिशाओंमें ह्रींकार वीजोंको स्थापितकर पिशाचिका नामक यन्त्रको लिखे । फिर गंध पुष्पादिसे उक्त यंत्रका पूजनकर दही के भीतर रख दे तो वह सेवक निश्चय वशीभूत होगा । यह पिशाचिका नामक यंत्र सेवक वश्यका परम सुन्दर यंत्र है । इसको श्रीशंकरने स्वयं प्रकाशित किया है, अतः प्रत्येकको न देना चाहिये । किन्तु अधिकारीको ही देना योग्य है, नहीं तो गुप्त रक्खे १–७

इति श्री य० चि० म० प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसम्वादे तृ० बलदेवप्रसादमिश्रकृत भा०टी– भृत्यवश्यकरं पिशाचिसंज्ञं चतुर्दशं यन्त्रम् ।। १४ ।।

श्रीशिव उवाच।। क्रूरप्रकृतिकः स्वामी यदा संसेव्यते जनैः। सेव्यमानोऽपि हि सदा भवत्येव दुराग्रही ।। १ ।। खलैः परिवृतो नित्यं दुराचारो महीपतिः। उत्तमो वाऽधर्मो वाऽपि म्लेच्छो वा प्रभुतां गतः ।। २ ।। यन्त्रं कालानलं कुर्यात्तदा तद्वश्यसिद्धये । साध्यनामक्षरं लेख्यं ह्रीं कारे गर्भमध्यगम् ।। ३ ।। यावन्तश्चाक्षरा नाम्नि तावंतश्च तथा लिखेत् ।। ईकारमन्ते संलेख्यं रोचनाभूर्जपत्रके ।। ४ ।। त्रिरावर्तं चतुष्कोणं दीर्घेण फलवत्कृतम्।

क्रूरवश्यकरं कालानलंयन्त्रम्



राजिकाप्रतिमां कुर्यात्तत्पादस्य च पांसुना ।। ५ ।। हृन्मध्य प्रक्षिपेत्तस्य यन्त्रं कालानलं महत् । संपूज्य प्रतिमां तां तु

---

श्रीशिवजी बोले—हे शैलसुते ! यदि दुष्ट पुरुषोंसे युक्त क्रूरप्रकृति स्वामी मनुष्योंके यथायोग्य सेवन करनेपर भी अपने दुराग्रह भावको न छोड़े, सब उसके मोहके लिये गोरोचनसे भोजपत्रके ऊपर तीन रेखासे मिश्रित चतुष्कोण कालानक यंत्रको लिखकर ह्रीं बीजकी रेखाके भीतर साध्यव्यक्तिके नामके अक्षर लिख अन्तमें ई इस बीजको लिखे । परन्तु जितने साध्यव्यक्तिके नामके अक्षर हों उतनेही ह्रीं वर्ण होने चाहियें अर्थात् ह्रीं बीजोंकी कोई मुख्य गणना इस प्रसंगमें नहीं है, इसका उदाहरण यन्त्रमें देखना, तत्पश्चात् वृक्षके नीचेसे धूलि लाकर एक राजिका प्रतिमाको निर्माणकर उस प्रतिमाके हृदय भागमें उक्त कालानक यन्त्रको स्थापितकर गन्धादिसे पूजन करके कृष्ण १४ की रात्रिमें चूल्हेकी कर्वटमें

चुल्लीपार्श्वे निखन्य च । ॥ ६ ॥ पूरयेत्तां प्रयत्नेन चतुर्दश्यां महानिशि । एतत्करणमात्रेण स वश्यो जायते ध्रुवम् ॥ ७ ॥ अजारक्तेन संमिश्रं भक्तं पूपं तथैव च । बलिदानं प्रदातव्यं दिक्पालप्रीतये तदा ॥ ८ ॥ महाकालाय स्वाहेति मन्त्रेण जुहुयात्ततः । एवं क्रमेण संस्कृत्य ततश्चाष्टोत्तरं शतम् ॥ ९ ॥ तदेव भक्तं साज्यं तु रक्तपुष्पैश्च मिश्रितम् । यन्त्रं कालानलं नाम त्रिदशैरपि पूजितम् ॥ १० ॥

इति श्रीयन्त्रचिन्तामणौ कालानलं नाम पञ्चदशं यन्त्रम्॥ १५ ॥

---

श्रीशिव उवाच॥ वाणिज्यार्थं तु वाणिज्यं लाभार्थं वाञ्छितं पथि । तेषां मध्ये यदा कोऽपि प्रदुष्टो जायते नरः ॥ १ ॥ मार्गदेशे प्रभुर्वापि तदा यन्त्रं प्रकल्पयेत् । ह्रींकारोदरमध्ये तु साध्यनाम लिखेन्नरः ॥ २ ॥ उपरिष्टाच्चतुर्दिक्षु स्वाहान्तं प्रणवादिकम् । मध्ये आकर्षय लिखेच्चतुर्दिक्षु क्रमेण तु ॥ ३ ॥

---

खोदकर उक्त प्रतिमाको मन्त्रसहित गाड़ दे, फिर बकरेके रुधिरसे मिले भातसे दिक्पालोंकी प्रसन्नताके लिये बलिदान करके उक्त पदार्थमें घी लाल फूल मिलाकर 'ओं महाकालाय' इस मन्त्रसे अष्टोत्तरशत आहुति दे, तो देवताओंसे पूजित इस कालानलके प्रयोगसे साध्यमनुष्य निश्चय वशीभूत हो जायगा ॥ १–१० ॥

इति भाषाटीकासहित यन्त्रचिन्तामणिकी तृतीयपीठिका में कालानलनामवाला पन्द्रहवां यन्त्र ॥ १५ ॥

---

श्रीशिवजी बोले–यदि वाणिज्य व्यवहारके करनेवाले पुरुषों को वाणिज्य मार्गमें प्रभु अथवा अन्य कोई व्यक्ति दुखदाई हो तो उसके वशके लिये स्वरक्त गोरोचनसे भोजपत्रके ऊपर दो रेखावाले चतुष्कोण यन्त्रको लिखकर भीतरके भागमें ह्रीं बीजरेखाके मध्यमें साध्यव्यक्तिके नामको लिखकर पूर्वादि चारों दिशाओंमें 'ओं

पश्चात्तद्वेष्टयेद्यन्त्रं चतुष्कोणं द्विरेखया । कोणे कोणे त्रिशूलौ द्वौ चतुर्दिक्षु प्रकल्पयेत् ॥ ४ ॥ एवं कृत्वा प्रयत्नेन पूजयित्वा

उच्छिष्टपिशाचयन्त्रम्




सुगन्धकैः । स्वरक्तेन तु संमिश्रं रोचनाभूर्जपत्रके ॥ ५ । लिखित्वा खण्डवत्कृत्वा रहसि प्रक्षिपेत्ततः । ओमाकर्षय स्वाहा इमं मन्त्रं जपेत्तदा ॥६॥ तत्क्षणाज्जायते वश्यो महाक्रूरोऽपि मानवः ॥७॥

इति य०चि० ना० म०प्र० उ० सं० तृ० पी०व० दामोदरपण्डितोद्धृते दुष्टवशीकरणं उच्छिष्टपिशाचिकं नाम षोडशं यन्त्रम् ॥१६ ॥

---

आकर्षय स्वाहा ' इसको यन्त्रके भीतरही लिखे कि, जिससे साधकके नामके अक्षर मध्यगत हो जायँ, परन्तु यन्त्रके चारों कोनोंमें दो त्रिशूल भी लिखने योग्य हैं । फिर गन्धादिसे पूजन कर ' ओं आकर्षय स्वाहा' इस मन्त्रको पढ़कर यन्त्रके टुकड़े कर उक्त मार्गमें डालदे तो अति क्रूर प्रकृतिवाला मनुष्य भी उसी समय वशीभूत हो जायगा ॥ १–७ ॥

इति भाषाटीकासहित यन्त्रचिन्तामणिकी तृतीयपीठिकामें उच्छिष्टपिशाचिनामक सोलहवाँ यन्त्र समाप्त ॥ १६ ॥

श्रीशिव उवाच ।। यदा महाबलः शत्रोर्घातं कर्तुं हि वाञ्छति । तदा तत्सानुकूल्यार्थं यन्त्रं कुर्वीत कण्टकम् ।। १ ।। साध्यनाम लिखेन्मध्ये वर्तुलं वेष्टयेत्ततः । ईकारश्च भ्यकारश्च विसर्गान्तश्चतुर्दिशम् ।। २ ।। एकैकं तु लिखित्वा तु वर्तुलं वेष्टयेत्ततः । श्मशानभस्मना लेख्यमर्कपत्रद्वयोपरि ।।३।। संपुटं मेलयित्वा तु वेधयेत्कण्टकैस्ततः । निखन्य पूरयेद्यन्त्रं श्मशाने निशि पूजितम् ।।४ ।। बलिदानं प्रदातव्यं भूतेऽह्नि प्रयतो नरः। तत्क्षणाज्जायते शत्रुः सानुकूलो न संशयः ।।५।। कण्टकाख्यं महायन्त्रं दुष्टमोहनकं परम् । स्वशक्त्या दक्षिणां दद्यात्कालरात्रिः प्रीयतामिति ।। ६ ।।

दुष्टमोहनकरं कण्टकयन्त्रम्




इति दुष्टमोहनकरं कण्टकाख्यं सप्तदशं यन्त्रम् ।।१७।।

---

श्रीशिवजी बोले—जब कि, अतिबलवान् शत्रु घात करनेकी इच्छा करता हो तो उसको अनुकूल करनेके लिए श्मशानकी भस्म लाकर दो आकके पत्तोंपर पृथक्-पृथक् एक गोलाकार चक्र खींचकर उसके भीतर साध्य व्यक्तिके नामके अक्षर लिख " ईभ्यः " विसर्ग मिश्रित इन दो बीजोंको पूर्वादि चारों दिशाओंमें लिखकर फिर एक गोलाकार चक्र और खींचे कि जिसके खींचनेसे उक्तचक्र मध्यवर्ती हो जाय, तत्पश्चात् दोनों पत्रोंको संपुटमें लेकर काँटोंसे छेदकर कृष्णपक्षकी रात्रिमें पूजन करके श्मशानभूमिमें खोदकर गाड़ दे और भूतादि बलिप्रदान करे तो शत्रु उसी समय वशीभूत हो जायगा, यह दुष्टमोहनकालकंटक नाम यंत्र है, इसका यथायोग्य प्रयोगकर, " हे कालरात्रि ! प्रसन्न हो " इसको उच्चारण कर ब्राह्मणोंको दक्षिणा दे ।।१–६।।

इति यंत्रचिन्ता० तीसरी पीठि० बल० भाषाटीकासहित
दुष्टमोहनकर कण्टक नामवाला सत्रहवाँ यन्त्र ।।१७।।

श्रीशिव उवाच ।। सुहृदो बन्धुवर्गो वा शत्रुर्वा क्रुध्यते यदि तदा तत्कोपशान्त्यर्थं कुर्याद्यन्त्रं विचक्षणः ।। १ ।। मध्ये नाम लिखित्वा तु वर्तुलं वेष्टयेत्ततः । उपर्यधश्चोत्तरे च दक्षिणे च तथैव च ।। २ ।। बिन्दुवर्यं चतुर्दिक्षु वेष्टयित्वा लिखेत्तदा । हुंकारं तु लिखेद्गर्भे बिंदुमध्ये उपर्यधः ।। ३ ।। दक्षिणे चोत्तरे चैव

क्रोधशमनं जामदग्न्ययन्त्रम्




साध्यनाम च पूर्ववत् । अन्ते हुंकारसंयुक्तमधःपंक्तौप्रसादय ।।४।।एतद्यन्त्रं सुसंलेख्यं तालपत्रे सुविस्तृते । कण्टके नायसेनैव विलिखेत्सोमवासरे ।। ५ ।। कुलालमृत्तिकामध्ये यन्त्रं क्षिप्त्वा तु गोलकम् । कृत्वा पूजां प्रयत्नेन यस्मात्कोपः प्रशाम्यति ।। ६ ।। जामदग्न्यं महायन्त्रं सद्यः कोपहरं परम् । अक्रोधनः सत्यवादी जमदग्निदृढव्रतः ।। ७ ।। रामस्य जनकः

---

शिवजी बोले –मित्र अथवा बंधुवर्ग या शत्रु यदि क्रोधित हो जायँ तो उनके कोपको शान्त करनेके लिये गोरोचनसे ताड़के पत्रपर लोहेके काटोंसे सोमवारके दिन एक गोलाकार चक्र लिखकर पूर्वादि चारों दिशाओंमें कमलदल स्थापित कर उक्त गोलाकार चक्रके भीतर ३ रेखा निर्माण कर पहिली तीसरी रेखामें हुं इस बीजको लिख बीजकी पंक्तिके आदि अंतमें हुंकार मिश्रित अन्तमें अनुस्वार लगाकर साध्य व्यक्तिके नामके अक्षर लिखे और उक्त दलोंमें भी दो-दो रेखा कल्पनाकर प्रथम रेखामें हुं बीजको लिख नीचेकी रेखामें ‘ प्रसादय ’ इन अक्षरोंको लिखे, तत्पश्चात् कुम्हारकी मिट्टीमें

साक्षात्सत्त्वमूर्त्ते नमोऽस्तु ते । एवं मन्त्रं समुच्चार्य पूजयित्वा प्रयत्नतः ॥ ८ ॥ एवं सप्तदिनं कार्यं क्रोधोपहरणं परम् । सप्तमेऽह्नि पूजनीयो ब्राह्मणो वेदपारगः ॥ ९ ॥ नो चेद्दध्योदनं देयं मनुष्याहारपूरितम् ॥ क्रोधस्तु हृदयाद्याति प्रसन्नो जायते क्षणात् ॥१०॥

इति श्रीयन्त्रचिन्तामणौ क्रोधशमनं जामदग्न्यं नामाष्टादशं यन्त्रम् ॥ १८ ॥

श्रीशिव उवाच ॥ अतः परं देवि तव ब्रवीमि दौर्भाग्यहन्तृणि च कामिनीनाम् । यन्त्राणि सौभाग्यविवर्धनानि सम्मोहनानि प्रियकामुकानाम् ॥ १ ॥ एकपंक्तौ तु संलेख्यं ह्रींकार-

---

यंत्रको रखकर इस मन्त्रको पढ़ता हुआ गंधादिकोंसे पूजन करें । यह जामदग्न्य महायन्त्र तुरन्त कोपको शांत करनेवाला है मन्त्र :– " अक्रोधनः सत्यवादी जमदग्निर्दृढव्रतः । रामस्य जनकः साक्षात् सत्त्वमूर्ते नमोस्तु ते ॥ " इस विधिसे सात दिनतक क्रोधके-नाश करनेवाले जामदग्न्य यन्त्रका पूजनकर वेदके जाननेवाले अतिश्रेष्ठ ब्राह्मणका पूजन कर भोजनादि क्रियाओंसे तृप्त करे अथवा मनुष्य की तृप्तिके योग्य दही चावल देकर ब्रह्मदेवको तृप्त करे तो साध्य व्यक्ति हृदयसे क्रोधको दूरकर प्रसन्न होगा ॥ १–१० ॥

इति श्रीयन्त्रचिन्तामणिकी तृतीय पीठिकामें बलदेवप्रसादकृत भा० टी० में क्रोधशमन जामदग्न्य नामवाला अठारहवां यन्त्र॥१८॥

---

श्री शंकरजी बोले–हे देवि ! कामिनी स्त्रियोंके दौर्भाग्यनाशक और सौभाग्यवर्द्धक संमोहन नामक यंत्रको तुमसे कहता हूं । यन्त्रके निर्माणकी क्रिया इस प्रकार है – गोरोचन, कुंकुम, कस्तूरी, लालचन्दन इन चारों वस्तुओंको एकत्रित करके भोजपत्रके ऊपर चतुष्कोण वेष्टित एक चौकोर यन्त्रको लिखकर ईशानादि चारों कोनोंमें

त्रितयं शुभम् । तस्याधस्तात्समालेख्यं नाम वै रमणस्य च ॥ २ ॥ ततस्तृतीयपंक्तौ तु ह्रीँ कारत्रितयं पुनः ।



स्त्रीसौभाग्यकरं ललिता यंत्रम्

ततस्तद्वेष्टयेत्सम्यक् चतुष्कोणं तुरेखया ॥ ३ ॥ ततश्चाष्टदलं कृत्वा बीजन्यासं प्रकल्पयेत् । ह्रींकारत्रितयं लेख्यं चतुर्दिक्षु वरानने ॥ ४ ॥ कोणेकोणे दले न्यस्य ह्रींकारं तु विचक्षणः । रोचनाकुंकुमेनैव मृगनाभिस्तु चन्दनम् ॥ ५ ॥ एकीकृत्य लिखेद्यन्त्रं भूर्जपत्रे सुविस्तृते । त्रयोदश्यां सिते पक्षे साधकश्चोत्तरामुखः ॥ ६ ॥ तद्यन्त्रं पूजयेन्नित्यं रात्रौ रात्रौ वरानने । भोगैर्नाना विधैः पुष्पैर्वस्त्रालंकारभूषणैः ॥ ७ ॥ एवं सप्तदिनं कृत्वा

---

कमल दल स्थापित करे । पुनः यन्त्रके भीतर तीन रेखा तिरछी लिखकर ऊपर नीचेकी दो रेखाओंमें तीन-तीन ह्रीं बीज स्थापितकर बीचकी रेखाओंमें अनुस्वार युक्त अर्थात् द्वितीयविभक्ति के एक वचनान्त पतिके नामको लिखे, तत्पश्चात् वहिर्भागके चतुष्कोणमें तीन तीन ह्रीं बीज लिखकर उक्त दलोंमें एक-एक ह्रीं वर्ण लिखकर कृष्णपक्षकी त्रयोदशीके दिन रात्रिके समयमें उत्तरकी ओर मुखकरके सात रात्रितक नियम पूर्वक नानाप्रकारके भोग तथा गंधादिकसे तुम्हारी प्रसन्नताके कारण यन्त्रराजका पूजनकर सौभाग्यवती सात स्त्रियोंको भोजन कराये । तत्पश्चात् वक्ष्यमाण मंत्रको उच्चारणकर विसर्जन करे । मंत्रो यथा—"शंकरस्य प्रिये देवि ललिते प्रीयतामिति । रूपं देहि यशो देहि सौभाग्य देहि मे श्रियम् ।

तदन्ते तव तुष्टये । स्त्रियः सौभाग्यसंयुक्ता भोजयेत् सप्त-संख्यया ।। ८ ।। शंकरस्य प्रिये देवि ललिते प्रीयतामिति ।। रूपं देहि यशो देहि सौभाग्यं देहि मे श्रियम् ।। ९ ।। भगवति वाञ्छितं देहि प्रियमायुष्यवर्धनम् । एवं मन्त्रं समुच्चार्य ततश्चाथ विसर्जयेत् ।। १० । तन्द्यन्त्रं धातुनावेष्टय सदा कण्ठे तु धारयेत् । सुभगा रूपसंपन्ना पतिप्रियतमा भवेत् । ललिताख्यं महायन्त्रं स्त्रीणां सौभाग्यकारकम् ।। ११ ।।

श्रीय० सौभाग्यकरं ललिताख्यमेकोनविंशं यन्त्रम् ।। १९ ।।

श्रीशिव उवाच ।। शृणु देवि प्रसन्नेन यन्त्रं भर्तृप्रसादनम् । संलिख्याथ प्रियं नाम सांकारपुटितं शुभम् ।। १ ।। अधोपरि तथा लेख्यं सांकारद्वितयं शुभम् । ततस्तद्वेष्टयेत्सम्यग् वर्तुलं रेखयैकया ।। २ ।। तस्योपरि दलान्यष्टौ ह्रींकारसहिताँल्लिखेत् । रोचनाकुंकुमेनैव भूर्जपत्रे लिखेन्नरः ।। ३ ।। त्रिदिनं पूजयेन्नित्यं

---

भगवति वाञ्छितं देहि प्रियमायुष्यवर्धनम् ।।" फिर यंत्रको धातुके बने तावीजमें बन्द करके जो स्त्री कंठमें धारण करेगी वह यन्त्रराजके स्थित रहनेतक सौभाग्य तथा रूपादिसे युक्त प्रीतमको अत्यन्त प्यारी होगी। यह ललिताख्य यन्त्र स्त्रियोंको अधिक सौभाग्यका देनेवाला है ।। १–११ ।।

इति यत्र० ललितानाम सौभाग्यदायक उन्नीसवां यन्त्र ।।१९।।

---

श्रीशिवजी बोले—हे देवि ! प्रसन्न मन होकर पतिवश्य-कारक यन्त्रको सुनो ! गोलाकार एक चक्रको गोरोचरनसे भोज-पत्रके ऊपर खींचकर अष्टदलसे वेष्टित कर उक्त गोलाकार यन्त्रके भीतर पूर्वादि चारों भागोंमें सांबीजको लिखकर अनुस्वार युक्त साध्यव्यक्तिके नाम को लिखे और उक्त आठ दलोंमें ह्रीं बीजोंको लिख तीन रात्रितक यन्त्रका गन्धादिसे पूजन करे, चौथे दिन विधान-

रात्रौ रात्रौ तु पूर्ववत् । ततःस्नात्वा चतुर्थेऽह्नि पूजयेत्सुभगा त्रयम् ॥ ४ ॥ अनङ्गवल्लभे देवि त्वं च मे प्रीयतामिति ।

स्त्रीसौभाग्यकरं यंत्रम्




एनं प्रियं महावश्यं कुरु त्वं स्मरवल्लभे ॥ ५ ॥ एतन्मन्त्रं समुच्चार्य पूजयित्वा तु ताः स्त्रियः । तद्यन्त्रं धातुनाऽऽवेष्टच कृत्वा कण्ठे प्रधारयेत् ॥ ६ ॥ पतिर्दासो भवेत्तस्या यन्त्रराजप्रसादतः । सौभाग्यमतुलं तस्या जायते नात्र संशयः ॥ ७ ॥ न सपत्नीं गणयति सौभाग्यमदर्दर्पिताम् । एका सुवासिनी भोज्या चतुर्दश्यां सितेतरे ॥८॥ पक्षे पक्षे रतिप्रीत्यै पूज्यं यन्त्रं तु नित्यशः । यासां तासां न दातव्यं यन्त्रं सौभाग्यवर्धनम् ॥ ९ ॥

इति यं० स्त्रीसौभाग्यकरं विंशतितमं यन्त्रम् ॥२०॥

---

पूर्वक तीन सौभाग्यवती स्त्रियों को पूजितकर वक्ष्यमाण मन्त्रका उच्चारण करे । मन्त्र यथा—"अङ्गवल्लभे देवि त्वं च मे प्रीयतामिति, एनं प्रियं महावश्यं कुरु त्वं स्मरवल्लभे ॥" इस प्रकार यन्त्रका पूजन कर धातुवेष्टित कर कंठमें धारण करे तो पति दासके समान हो जायगा और यन्त्रराजके प्रतापसे उसका प्रताप अतुल होगा, उपरोक्त क्रियाओंके करनेपर भी पति सौभाग्य मदसे दर्पित स्त्रीको कुछ न समझे तो शुक्लपक्षकी प्रति चतुर्दशीमें रतिकी प्रीतिके लिये एक सौभाग्यवती स्त्रीको भोजन कराकर पुनः यन्त्रराजका पूजन करे, यह सौभाग्यवर्द्धकयंत्र अधिकारीको ही दे ॥ १–९॥

इति श्रीयन्त्रचिन्तामणिकी पं० बलदेवप्रसादमिश्रकृतभाषाटीकायुत तीसरी पीठिकामें स्त्रीसौभाग्यकारकनामवाला बीसवां यन्त्र ॥२०॥

श्रीशिव उवाच ।। योषिद्वश्यं प्रवक्ष्यामि शृणु देवि सुशोभनम् । रोचनाकुंकुमेनैव श्रीखण्डमृगनाभिना ।। १ ।। भूर्ज पत्रे तु संलेख्यं जातीकाष्ठेन यन्त्रकम् । ऐं ह्रीं क्लीं च ततो नाम ऐं ह्रीं क्लीं च पुनस्तथा ।। २ ।। एवं संपुटितं कृत्वा चतुष्कोणं तु वेष्टयेत् । उपर्यधोऽपि विलिखेत्पञ्च बीजानि यत्नतः ।। ३ ।। ऐं ह्रीं क्लीं च तथा क्षीं च ऐं चान्ते च पुनस्तथा । कोणेषु विन्यसेद्बीजानि-ऐं ह्रीं क्लीं च तथैव च ।। ४ ।। दलाकृतिस्तु कर्तव्या बीजानामुपरि क्रमात् । एवं चतुर्दलं कृत्वा बीजमुक्तं मनोहरम् ।। ५ ।। राजिकाप्रतिमां कृत्वा मदनस्य तु काष्ठके । तस्या हृदि तु संस्थाप्य तद्यन्त्रं पूजयेत्ततः ।। ६ ।। भोगैश्च विविधैर्गन्धैर्धूपैदीपैः फलैः शुभैः । रात्रौ रात्रौ प्रकर्तव्या दिनान्ते प्रत्यहं शुभे ।। ७ ।। एवं कृते च सा नारी दासी नूनं

---

श्रीशिवजी बोले—हे देवि ! स्त्रीवश्यकारक अतिश्रेष्ठ यन्त्रको कहता हूँ, श्रवण करो । गोरोचन, कुंकुम, लालचंदन, कस्तूरी इन सब वस्तुओंको इकट्ठाकर बड़े भोजपत्रपर नीचे चमेलीकी कलमसे एक अंगुल के अंतरसे कर्णिकायुक्त दोरेखाओंके ऊपर नीचे दो आकारकी कल्पना करे । फिर कर्णिकाओंमें ऐं, ह्रीं, क्लीं, इन बीजोंको पूर्णकर उक्त दोनों दलाकारोंमें ए, ह्रीं, क्लीं, क्षीं, ऐं इन बीजोंको लिखकर रेखाओंके भीतर ऐं, ह्रीं, क्लीं, इन बीजोंको आदि अंतमें लगाकर अनुस्वारयुक्त साध्यव्यक्तिके नामको लिखे । तत्पश्चात् काष्ठके ऊपर (राजिका) राईसे कामदेवकी प्रतिमाको निर्माणकर उक्त यंत्रको हृदयपर स्थापितकर, गंध, पुष्प, धूप, दीप, फल, नैवेद्य आदि शुभ वस्तुओंसे सायंकालके समय सिद्धिपर्यंन्त प्रत्येक रात्रिमें वक्ष्यमाण मन्त्रको उच्चारणकर कामदेवका पूजन करे तो वह नारी दासीके समान हो जायगी । मंत्र यथा—"कामो-

प्रजायते। यन्त्रं श्रीकामराजाख्यंयोषिद्वश्यकरं परम् ।। ८ ।। संपूज्यो मदनश्चात्र राजिकाप्रतिमोदरे । कामोऽनङ्गः पुष्पशरः कन्दर्पो मीनकेतनः ।।९।।श्रीविष्णुतनयो देवः प्रसन्नो भव मे प्रभो ।। इति पूजनमन्त्रः ।। एवं नित्यं प्रकर्तव्यं यावत्सा वश्यतामियात् ।। १० ।।

स्त्रीवश्यकरं कामराजयन्त्रम्




इति श्रीयन्त्रचि० ना० म० प्र० उ० तृ० व० दा० स्त्रीवश्यकरं कामराजाख्यमेकविंशं यन्त्रम् ।। २१ ।।

---

ऽनङ्गः पुष्पशरः कन्दर्पो मीनकेतनः। श्रीविष्णुतनयो देवः प्रसन्नो भव मे प्रभो।" यह काम राजाख्य मंत्र स्त्रियोंके वश्यकारक है, इसके उपरान्त राईकी वनी प्रतिमाके उदरमें कामदेवका पूजन करे ।। १–१० ।।

इति यन्त्रचिन्तामणिकी तीसरी पीठिकाकी भाषाटीकामें स्त्रीवश्यकारक कामराजनामवाला इक्कीसवां यन्त्र ।। २१।।

श्रीशिव उवाच ।। शृणु देवि प्रवक्ष्यामि मानिनीमानमर्दनम् । यन्त्रं सुदुर्लभं लोके विख्यातं मानमर्दनम् ।। १ ।। तुरगस्य तु रक्तेन रोचना भूर्जपत्रके । प्रणवं च ततो ह्लीं च साध्यनामाक्षरं पृथक् ।। २ ।। नामाक्षराणि ह्लींकारपुटितानि विचक्षणः । आद्यन्ते प्रणवं लेख्यमेकपंक्तौ विचक्षणैः ।। ३ ।। ततस्तद्वेष्टयेत्सम्यक् चतुष्कोणं तु रेखया । उपर्यधश्च संलेख्यं पूर्ववद्बीजसंपुटम् ।। ४ ।। तिर्यग्भागे द्विभागे तु पूर्ववन्नाम सम्पुटम् । कोणे दलाकृतिं कुर्यान्मदनाकृति मध्यतः ।। ५ ।।

स्त्रीवश्यकरं मदनमर्दनयन्त्रम्




एवं यन्त्रं सुसंलेख्यं मदनप्रतिमां शुभाम् । मदनस्य तु काष्ठेन

---

श्री शिवजी बोले—हे देवि ! सुदुर्लभ लोकप्रसिद्ध मानिनी स्त्रियोंके मानमर्दन करनेवाले यन्त्रको कहता हूँ, सुनो । घोडेके रुधिरसे भोजपत्रके ऊपर मदनकाष्ठकी कलमसे एक अंगुलके अन्तरसे दो तिरछी रेखा खींचकर उनके आदि अन्तमें कमलदल आकार वनाकर उक्त रेखाओंके ऊपर नीचेके दोनों भागोंमें कुछ गोलाई युक्त दो रेखा खींचे । फिर "ओं ह्लीं देह्लीं वह्लीं दह्लीं त्तह्लीं ओं" इन ग्यारह बीजोंको प्रत्येक कोष्ठमें स्थापितकर यन्त्रको पूर्ण करे ।

कृत्वा हृदि विनिक्षिपेत् ।। ६ ।। सरन्ध्रं हृदयं कुर्याद्यथा यन्त्रं सुतिष्ठति । संवेष्ट्य प्रक्षिपेन्नूनं यन्त्रं यस्योपरि स्फुटम् ।। ७ ।। रक्तचन्दनमाल्याद्यैः पूजयेत्प्रत्यहं तु तत् । एकविंशद्दिनं यावत्सा तस्य वशतामियात् ।। ८ ।।

इति यं० चि० स्त्रीवशीकरं मदनमर्दनं नाम द्वाविंशं यन्त्रम् ।।२२।।

कामाक्षं यन्त्रम्




श्रीशिव उवाच ।। अतः परं प्रवक्ष्यामि राजस्त्रीवश्यकारकम् । यथा तद्दृष्टिपातेन कामबाणहता इव ।।१।। पतन्ति सहसा दृष्ट्वा मानिन्योमदविह्वलाः । रोचनाकुंकुमेनैव भूर्जपत्रे लिखेन्नरः ।। २ ।। कर्पूरेण

---

तत्पश्चात् मदनकाष्ठसे एक कामदेवकी प्रतिमाको निर्माण करे कि, जिसके हृदयमें एक ऐसा छिद्र हो कि, जिसमें उक्त यन्त्र, सुभीतेके साथ प्रविष्ट होसके, फिर लालचंदन माला आदि वस्तुओंसे पूजनकर यन्त्रेश्वरको उक्तप्रतिमाके हृदयमें स्थापितकर इक्कीस दिनतक पूजन करे तो साध्या वशमें हो जायगी ।। १–८ ।।

इति यन्त्रचिन्तामणिकी तीसरी पीठिकामें स्त्रीवशीकरण मदनमर्दन नामवाला बाईसवां यन्त्र ।। २२ ।।

---

श्रीशिवजी बोले–अब राजस्त्रीवश्यकारक यन्त्रको कहता हूँ–, जिसके दर्शनमात्रसे कामबाणसे आहत होकर मानिनी स्त्रियाँ

समायुक्तं जातीकाष्ठेनयत्नतः । षट्कोणस्य तु मध्ये तु साध्यनाम-प्रतिष्ठितम् ।। ३ ।। क्रोंकारं सर्वतो लेख्यं कोणोपरि प्रयत्नतः । पूर्वकोणान्तराले तु ह्लींकारद्वितयं लिखेत् ।।४।। कोणमध्ये लिखेच्चैकं ह्लींकारं पूर्वसंमितम् । तत्सर्वं वेष्टयेत्पश्चाद्वर्तुलं रेखया शुभम् ।।५ ।। दक्षिणे त्रिदलं कुर्यादीशान्येऽपि दलं तथा । ह्लींकारं दलमध्ये तु क्रमेण प्रविलेखयेत् ।। ६ ।। एवं विलिख्य तद्यन्त्रं पूजयेद् भक्तिभावतः । गन्धपुष्पैः सुनैवेद्यैः शुक्लाम्बरधरः स्वयम् ।। ७ ।। चिन्तयेत्तां स्त्रियं रात्रौ यन्त्रस्य पुरतः स्थितः । एवं सप्तदिनं कृत्वा तदन्ते ब्राह्मणाः स्त्रियः ।। ८ ।। संभोज्या विविधैर्भोज्यैः कामाक्षी प्रीयतामिति । शक्त्या च दक्षिणां दद्याद्भोजयेत्साधकः स्त्रियम् ।। ९ ।। त्रिलोहवेष्टितं कृत्वा बाहु-

---

मदसे व्याकुल हो पतित होंगी । विधान यथा—गोरोचन, कुंकुम, कपूर इन वस्तुओंको एकत्रित करके भोजपत्रके ऊपर चमेली की कलमसे एक षट्कोण यन्त्रको निर्माणकर उसके बहिर्भागमें एक गोलाकार चक्र खींच और दक्षिणभागमें तीन और ईशानभागमें एक दल लिखकर उक्त षट्कोणके भीतर साध्यव्यक्तिके नामके अक्षर लिख कर प्रत्येक कोणमें ह्लींबीजको लिखे । तत्पश्चात् पूर्वकोणमें क्रोंबीजको लिख, दो ह्लीं बीजोंको लिखे और पाँचों कोणोंमें सिर्फ एक क्रों बीजको लिख उक्त दलोंमें एक-एक ह्लीं बीज लिखे । पुनः भक्तिभावसे गंध पुष्प नैवेद्यादि पदार्थोंसे यन्त्रका पूजन कर श्वेतवस्त्रको धारणकर उक्त यन्त्रको सम्मुख रखकर रात्रिके समय साध्यस्त्रीका चिन्तन करे, इस प्रकार सात दिनतक पूजनादि क्रियाओंको करके शक्तिके अनुसार ब्राह्मणोंकी स्त्रियोंको विविधप्रकारके भोज्य पदार्थोंसे भोजन कराकर यथाशक्ति दक्षिणा देकर कहे कि "कामाक्षी प्रीयताम्" । फिर त्रिलोहके ताबीज में

मूले तु धारयेत्। तं दृष्टा राजपत्न्यश्च कन्दर्पज्वरपीडिताः। स्वयं संप्रार्थयेयुर्वै का कथेतरयोषिताम् ॥ १० ॥

इतिश्रीय० चि० राजस्त्रीवश्यकरं कामाक्षं नाम त्रयोविशं यन्त्रम्।२३

श्रीशिव उवाच ॥ अतः परं प्रवक्ष्यामि बीजमेकं महा-फलम्। सततं धारयेन्नित्यं स्त्रीणां प्रियतरो भवेत् ॥ १ ॥ स्त्री चेद्धारयते नित्यं सा सौभाग्यवती भवेत्। सौभाग्यजननं बीजं नृणां चैव विशेषतः ॥ १ ॥ एतद्बीजाक्षरं गोप्यं न देयं यस्य कस्यचित् ।सकारं च हकारं च ककारं च तथैव च ॥ ३ ॥ लकारं च डकारं च ईकारान्तं प्रतिष्ठितम्। एवं क्रमेण संयोज्य अक्षराणां च षट्ककम् ॥ ४ ॥ ईकारस्वरसंयुक्तं

---

वंदकरके भुजामें धारण करनेवाले साधकको देखकर कामज्वरसे पीड़ित हुई राजस्त्रियां स्वयं प्रार्थना करेंगी, अन्यस्त्रियोंकी तो वात ही क्या है ॥ १–१० ॥

इति यन्त्रचिन्तामणिकी तीसरी पीठिकामें राजस्त्रीवश्यकारक कामाक्षनामक तेईसवां यन्त्र ॥ २३ ॥

---

श्रीशिवजी बोले –हे प्रिये ! अत्यन्त फलदायक एक बीजको कहता हूँ कि, जिसके नित्य प्रति धारण करनेसे साधक स्त्रियोंको अत्यन्त प्यारा होगा। विधान यथा–जलमिश्रित गोरोचनसे भोज-पत्रके ऊपर तीन रेखा युक्त एक अर्द्ध चन्द्राकार लिखकर, सकार, हकार, ककार, लकार, डकार, ईकार, इन छः अक्षरोंको ईकारमें गर्भितकर उक्त अर्द्ध–चन्द्राकारके वीचमें स्थापित करे। तत्पश्चात् गन्ध पुष्पादिकोंसे पूजनकर सुवर्णमें लपेटकर पुरुष भुजामें और स्त्री गलेमें धारण करे। सौभाग्यका देनेवाला अत्यन्त पवित्र

बिन्दुना परिशोभितम् । रोचनानीरयुक्तेन विजययन्त्रम्,
भूर्जपत्रे लिखेन्नरः ॥ ५ ॥ त्रिदिनं पूजनं
कृत्वा हेम्ना वै वेष्टयेत्ततः । पुरुषो
बाहुमूले वा नारी चेद्गलके पुनः ॥ ६ ॥ धारये-
द्बीजराजं तु स्फुटं दौर्भाग्यनाशनम् । महा-
सौभाग्यजननं श्रीशिवेन प्रतिष्ठितम् ॥ ७ ॥

ह्लीं
क
ल
ड
ई

इति यन्त्रचि० ना० म० प्र० उ० तृ० व० दा० सौभाग्य-
जननविजयं नाम चतुर्विशं यन्त्रम् ॥ २४ ॥

श्रीशिव उवाच ॥ अतः परं प्रवक्ष्यामि यन्त्रं सौभाग्यदा-
यकम् । स्त्रीणामेव समुद्दिष्टं यन्त्रं कमलसंज्ञकम् ॥ १ ॥ तस्य
संधारणाद्देवि वन्ध्या गर्भवती भवेत् । मृतवत्सा तु या नारी

---

इस बीजराज को गुप्त भावसे रखना चाहिये, हरेकको नही देना चाहिये, क्योंकि, उक्त यन्त्रराज शिव प्रतिष्ठित होनेसे शीघ्र दौर्भाग्यनाशक और सौभाग्यजनक भावको धारण करनेवाला है ॥ १–७ ॥

इति श्रीयन्त्रचिन्तामणिकी तीसरी पीठिकामें सौभाग्यजनन-
विजय नामवाला चौबीसवां यन्त्र ॥ २४ ॥

---

श्रीशिवजी बोले–अब सौभाग्यके देनेवाले यन्त्रको कहता हूँ–कमल संज्ञक यन्त्रका स्त्रियोंके लिये प्रयोग करना योग्य है। विधान यथा-गोरोचनसे भोजपत्रके ऊपर एक गोलाकार चक्र खींचकर वहिर्भाग अष्टदलोंसे सुशोभितकर उक्त गोलाकारके भीतर तीन रेखा कल्पनाकर ऊपर नीचेकी रेखाओंमें क्रों और मध्य की रेखामें ओं ह्लीं इन दो बीजोंको आदिमें मिश्रितकर

सा लभेत्पुत्रमुत्तमम् ।। २ ।। धृत्वा तु जायते देवि जीवत्पुत्रा न संशयः । रोचनाकुंकुमेनैव भूर्जपत्रे लिखेन्नरः ।। ३ ।। प्रणवं-तु लिखेत्पूर्वं ह्लींकारन्तदनन्तरम् । रमणस्य ततो नाम ह्लींकारान्तं प्रतिष्ठितम् ।। ४ ।। उपर्यधोऽपि विलिखेत्क्रोंकारमेककं तथा । ततस्तद्वेष्टयेत्सर्वं वर्तुलं रेखयैकया ।। ५ ।। तस्योपरि-दलान्यष्टौ बीजाक्षरयुतानि च । जूँकारंच चतुर्दिक्षु दलमध्ये तु विन्यसेत् ।। ६ ।। ॐकारं च तथा ह्लीं च जूँकारं च तथैव च । ह्रींकारं च पुनर्लेख्यमेवं बीजचतुष्टयम् ।। ७ ।। कोणे कोणे दले लेख्यं मध्यदेशे तु साधकः । एवं यन्त्रं सुसंलेख्यं पूजयेत्तु दिनत्रयम् ।। ८ ।। भोजयेन्मिथुनं चैकं लोकेशः प्रीयतामिति । पश्चात्तं तन्तुनाऽऽवेष्टच त्रिलोहेन विशेषतः ।। ९ ।। वर्तुलं मणि-वत्कृत्वा हारमध्ये तु धारयेत् । धारणाज्जायते देवि सौभाग्य-मतुलं महत् ।। १० ।। पुत्रं च लभते नूनं वन्ध्यात्वं च प्रशा-

---

साध्यव्यक्ति अर्थात् पतिके नामके अक्षर लिखकर फिर अन्तमें सिर्फ ह्लीं बीजको लिखे। पूर्वादि चारों दिशाओं में जूंबीजको लिखकर ओं, ह्लीं, जूं, ह्लीं इन चार बीजोंको ईशानादि चारों कोनोंमें स्थापित करे। तत्पश्चात् गन्ध, पुष्प, तांबूल, नैवेद्यादि पदार्थोंसे तीन दिनतक पूजनकर, 'हे लोकेश! प्रीयताम्' इस वाक्यको उच्चारणकर एक स्त्री-पुरुष को भोजन कराये। फिर कच्चेडोरेसे लपेटकर उक्त यन्त्रेश्वर को त्रिलोहमें बन्दकर धारण करे, तो हे देवि! अतुल अतिश्रेष्ठ सौभाग्य प्राप्त होगा। इसका और भी प्रताप है कि, इसके धारण करनेसे वन्ध्या स्त्री भी गर्भवती होकर उत्तम पुत्रको प्राप्तकर वंध्यात्व रहित हो जाय और मृतवत्सा उत्तम पुत्रको प्राप्त हो इसमें किंचित् भी सदेह नहीं। हारमें मिलाकर धारण करे तो भी उक्त फल प्राप्त होसकता है, इस कमलाख्य महा-

ष्यति । कमलाख्यं महायन्त्रं सृष्टं तु ब्रह्मणा पुरा । न देयं यस्य कस्यापि साधकेन वरानने ।। ११ ।।

कमलाख्ययन्त्रम्




इति श्रीयन्त्र० सौभाग्यजननं कमलाख्य नाम पञ्चविंशं यंत्रम् ।। २५।

**स्वप्नेन संप्राप्य सदाशिवाच्च दामोदरोऽत्रारचयेच्च कल्पम् ।।**
**तस्मिन्महाकल्पवरे सुसत्ये गतः समाप्ति प्रथमोऽधिकारः ।। १ ।।**

---

यन्त्रको श्रीब्रह्माजीने कल्पित किया है। अतः साधकको उचित है कि अधिकारी के सिवाय और किसीको न दे ।। १–११ ।।

इति श्रीयन्त्रचिन्तामणिकी तीसरी पीठिकामें सौभाग्यजनन नामवालापच्चीसवाँ यन्त्र ।। २५ ।।

---

स्वप्नावस्थामें शिवजीसे प्राप्त कर दामोदर पण्डितके वनाये श्रेष्ठकल्प सत्य यन्त्रचिन्तामणिकल्पका प्रथम अधिकार समाप्त हुआ ।। १ ।।

**सद्यन्त्रचिन्तामणिसर्वसिद्धिदे श्रीचन्द्रचूडस्य मुखाद्विनिर्गते । तस्मिंस्तृतीयां किल पीठिकामिमां चकार दामोदर पण्डितः सुधीः ।। २ ।। वश्याभिधानं प्रथमाधिकारं शृणोति यो भक्तियुतो मनुष्यः । तस्याशु देवो भगवान्महेशो ददाति लक्ष्मीं विपुलां सुसिद्धिम् ।। ३ ।।**

इति श्रीयन्त्रन्चितामणौ महाकल्प प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे दामोदरपण्डितोद्धृत तृतीयपीठिकायां वश्याधिकारः समाप्तः।।

इति प्रथमोऽधिकारः ।। १ ।।

**अथाकर्षणाधिकारः**

**जयति जगदशेषं द्योतयन्दिव्यभासा विशदकिरणकान्तिः-प्रस्फुरच्चन्द्रमौलिः । विषमविषमहाहिप्रोल्ललच्चारुहारः सतत**

---

श्रीचन्द्रचूड शिवजीके मुखसे निकले सत् यन्त्रचिन्तामणिकल्पकी तीसरी पीठिका पंडित प्रवर श्रीदामोदरजीने इस भाँतिसे रचना की ।। २ ।। इस वश्याधिकारनामक तीसरे अधिकारको जो मनुष्य भक्तिपूर्वक सुनते हैं उनको श्रीशिवजी महाराज प्रसन्न होकर अधिक लक्ष्मी और सुसिद्धि देते हैं ।। ३ ।।

इति श्रीयन्त्रचिन्तामणौ महाकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसम्वादे दामोदरपंडितोद्धृत पं० बलदेवप्रसादजीमिश्रकृतभाषाटीकासहिततृतीयपीठिकायां

वश्याधिकारः समाप्तः ।।

समस्त संसारको अपनी दिव्य कान्तिसे प्रकाशित करनेवाले, विषम विषको पान करनेवाले, सर्पोंके प्रकाशमान मनोहर हारसे सुशोभित, मस्तकमें चन्द्रमाको धारण करनेवाले, निर्मल कांतिसे

मसिततेजा ज्ञानमूर्तिर्महेशः ।। १ ।। चिन्तामणौ कल्पवरे चतुर्थी प्रारभ्यते संप्रति पीठिकेयम् । आकृष्टियन्त्राणि परिस्फुटानि विचारयाम्यत्र तु पीठिकायाम् ।। २ ।।

श्रीशिव उवाच–संलिख्य नामानि च भूर्जमध्ये गोरोचना-कुङ्कुमचन्दनैश्च । सकारबीजास्तु विसर्गयुक्तास्तस्योपरि-ष्टाद्विलिखेत्तु पञ्च ।। १ ।। इकारमन्ते विनिवेश्य पश्चाद्विसर्ग-युक्तौ विलिखेत्सकारौ । क्रौं ह्रीं तथा क्रौं च विलिख्य पंक्तौ वर्णस्य पङ्क्तिर्महता क्रमेण ।। २ ।। एवं द्विपङ्क्तौ तु विलिख्य पश्चान्नाम्नस्तथाऽधो विलिखेत्तु पङ्क्तम् । ह्रीं क्रों तथा ह्रीं च तथैव च क्रों विलिख्य नाम्नस्तु अधोविभागे ।। ३ ।। ह्रीं क्रों

---

शोभायमान, तीक्ष्ण तेजको धारण करनेवाले और ज्ञानकी मूर्त्ति श्रीशिवजी महाराजकी जय हो ।। १।। अब चिन्तामणिकल्पकी चौथी पीठिकामें आकर्षणके यन्त्रोंका स्फुट विचार करता हूँ ।। २ ।।

शिवजी बोले, हे कान्ते ! तीन रेखाओं युक्त एक चतुष्कोण यंत्रको गोरोचन, कुंकुम, लालचंदनसे भोजपत्र पर लिखकर उक्त यंत्रके भीतर पाँच रेखा कल्पनाकर प्रथम रेखामें पाँच विसर्गयुक्त सकार बीजोंको लिखकर अन्तमें इकार बीज लिखे । फिर दूसरी रेखामें सः सःक्रों ह्रीं क्रों इन पाँच बीजोंको लिखे, तीसरी रेखामें साध्य व्यक्तिके नामके अक्षर लिखे, चौथी रेखामें ह्रीं क्रों ह्रीं क्रों लिखे और पाँचवीं रेखामें ह्रीं क्रों ह्रीं दर इन पाँचबीजोंको लिखकर यंत्रकी पूर्ति करे । फिर विधान पूर्वक गंधादिसे पूजन करके लालसूत्रसे बांधे और अपने शरीरके उद्वर्तनसे मनुष्याकार मूर्तिको बनाकर उसके हृदय भागमें यंत्रराजको रखकर उद्वर्तनसे आच्छादितकर संध्यासमय तीन दिनतक खदिरकी अग्निमें

माणिभद्रयंत्रम्

| | | | | | |
|---|---|---|---|---|---|
| सः | सः | सः | सः | सः | ड |
| सः | सः | क्रौं | ह्रीं | क्रों | |

देवदत्तः

| | | | |
|---|---|---|---|
| ह्रीं | क्रों | ह्रीं | क्रों |
| ह्रीं | क्रों | ह्रीं | दर |

तथा ह्रीं च विलिख्य पङ्क्तौ तस्याप्यधो वै विलिखेच्च बीजे । दकाररेफौ तु विलिख्य पश्चात्संवेष्टयेत्त्रिः परिवर्तनेन ॥ ४ ॥ संपूज्य यन्त्रं विधिवच्च पश्चात्सूत्रेण संवेष्टच सुपाण्डुरेण । उद्वर्तनेन स्वशरीरजेन विधाय मूर्ति मनुजस्य नूनम् ॥ ५ ॥ निधाय तस्या हृदि यन्त्रराजं पिधाय चोद्वर्तनकेन पश्चात् । संतापयेत्तं खदिरस्य वह्निना दिनत्रयं यन्त्रवरं त्रिसन्ध्यम् ॥ ६ ॥ ॐ देवदत्तं वेगेन आकर्षय २ माणिभद्रस्वाहा ॥ तापनमन्त्रोऽयम् ॥ एवं कृते कर्षति माणिभद्रो देशान्तरस्थं मनुजं च नूनम् । अत्यन्तदूरस्थमपि क्रमेण समानयेद्यन्त्रवरो हि नूनम् ॥७॥ संपूजयंस्तापनशोषणाच्च श्रीमाणिभद्रो भगवान् हि वीरः ॥ ८ ॥

इति यंत्रचि० चतुर्थ० आंकर्षणाधिकार माणिभद्रं नाम प्रथमं यंत्रम् ॥ १ ॥

---

संतप्तकर इस मन्त्रको पढ़े । मंत्र-ओं देवदत्तं वेगेन आकर्षय २ माणिभद्र स्वाहा । यह तापन मन्त्र है । इस प्रकार करनेसे माणिभद्र दशांतरमें स्थित पुरुषोंको आकर्षित कर सकता है । वीर भगवान् श्रीमाणिभद्रजीने भी तापन-शोषणादि क्रियाओंसे श्रीयंत्रेश्वरका पूजन किया है ॥ १–८ ॥

इति श्रीयन्त्रचिन्तामणिकी चौथी पीठिकाके आकर्षण अधिकारमें माणिभद्रनाम प्रथम यन्त्र ॥ १ ॥

---

श्रीशिव उवाच ।। अतः परं प्रवक्ष्यामि यन्त्रं मित्रस्यदर्शनम्
रक्तचन्दनसम्मिश्रेण स्वरक्तेन च भूर्जके ।। १ ।। मध्ये नाम
लिखित्वा तु वर्तुलं वेष्टयेत्ततः । चतुर्दलं ततः कुर्याद्बीजयुक्तं

मित्रदर्शनयंत्रम्




मनोहरम् ।। २ ।। हूँकारं दलमध्ये तु प्रत्येकं विलिखेत् क्रमात् । एवं यन्त्रं तु संलिख्य पूजयेद्गंधपुष्पकैः ।। ३ ।। बलिपुष्पोपहारैश्च सुगन्धद्रव्यसंयुतैः । प्रक्षिपेद्घृतमध्ये तु आकृष्टिस्त्रिदिनाद्भवेत् ।। ४ इदं यन्त्रं महागोप्यं रक्षणीयं प्रयत्नतः । कस्याप्यग्रे न वक्तव्यं यदीच्छेत् सिद्धिमात्मनः ।। ५ ।।

श्रीशिव उवाच ।। अथातःसंप्रवक्ष्यामि यन्त्रं त्रैपुरकं महत् ।

---

श्रीशिवजी बोले–अब मित्रदर्शननामक यन्त्रको कहता हूँ, विधान इस प्रकार है–लालचंदन, स्वरक्त इनको मिलाकर भोजपत्रके ऊपर एक गोलाकार चक्रको खींचकर चार दलोंमें युक्त बीचमें साध्यव्यक्तिके नामके अक्षर लिखकर उक्त दलोंमें हूँ बीजको लिखे । फिर गन्ध, पुष्प, इत्यादि पदार्थोंसे पूजनकर घृतमें स्थापित कर दे, तीन दिनमेंही आकर्षण हो जायगा । इस यन्त्रकी बड़े यत्नसे रक्षा करे । स्व सिद्धि चाहने वाला इस यन्त्रको किसीको न दे और न किसीसे कहे ।। १–५ ।।

इति यन्त्रन्चितामणिकी चौथी पीठिकाके आकर्षणाधिकारमें
मित्रदर्शन नामवाला दूसरा यन्त्र ।। २ ।।

श्रीशिवजी बोले–अब त्रैपुरक यन्त्रको कहता हूँ । जलमिश्रित गोरोचनसे भोजपत्रके ऊपर षट्कोण यन्त्रको लिख प्रतिकोणमें

रोचनानीरयुक्तेन भूर्जपत्रे लिखेन्नरः ।। १ ।। मध्ये नाम लिखित्वा तु ह्रींकारपुटितं शुभम् । षट्कोणं तु लिखेत्पश्चान्नामगर्भं मनो-

त्रैपुरकाख्ययन्त्रम्




हरम् ।। २ ।। सौंकारान् विलिखेत् कोणे मध्यतो बिन्दुभूषितान् । एतद्यन्त्रं सुसम्पूज्य वृतमध्ये विनिक्षिपेत् ।। ३ ।। प्रत्यहं पूजयेन्नित्यं प्रार्थयेत् त्रिपुरान्ततः । आकर्षय महादेवि देवदत्तं ममप्रियम् ।। ४ ।। ऐं त्रिपुरे देवदेवेशि तुभ्यं दास्यामि याचितम् । अनेन प्रार्थयेद्देवीं त्रिपुरांयन्त्रगां यजेत् ।। ५ ।। एवं कृते सप्तमेऽह्नि आकृष्टिर्जायतेशुभे।।६।।

इति यन्त्रचिन्ता० त्रैपुरकं नाम तृतीयं यन्त्रम् ।। ३ ।।

श्रीशिव उवाच ।। अथातः संप्रवक्ष्यामि मानिन्याकर्षणं

---

सौं बीजको लिखकर मध्य भागमें 'ह्रीं देवदत्त ह्रीं' इस प्रकारके आदि अन्तमें ह्रीं बीज लगाकर साध्यव्यक्तिके नामाक्षर लिखे, उक्त यन्त्रका गन्धादिसे विधानपूर्वक पूजनकर घृतके मध्यमें स्थापित करे। प्रतिदिन त्रिपुरासे प्रार्थना करे। प्रार्थनामन्त्रः— आकर्षय महादेवि देवदत्तं मम प्रियम्। ऐं त्रिपुरे देवदेवेशि तुभ्यं दास्यामि याचितम् ।। हे शुभे ! इस विधानके करनेसे सातवें दिन आकर्षण होगा ।। १–६ ।।

इति श्रीयन्त्रचिन्तामणिकी चौथी पीठिकाके आकर्षणाधि-
कारमें त्रैपुरक नामवाला तीसरा यन्त्र ।।३।।

---

श्रीशिवजी बोले——मानिनी स्त्रीके आकर्षणको कहता हूँ। यह सम्पूर्ण यन्त्रों का रहस्यभूत तत्क्षण सिद्धि देनेवाला है। यह

शुभम् । रहस्यं सर्वयन्त्राणां तत्क्षणात् सिद्धिदायकम् ।। १ ।।
न वाच्यं यस्य कस्यापि यन्त्रराजं सुदुष्करम् । दक्षिणानामिरक्तेन वामे करतले लिखेत् ।। २ ।। प्रणवं च तथा ह्रीं क्लीं एकपंक्तौ लिखेन्नरः । तिं हां स्वाहेति त्रितयं तस्याधो विलिखेत् क्रमात् ।।३।। तस्याप्यधो लिखेन्नाम रमण्याश्चैव सुव्रते । त्रिकोणं वेष्टयेत्पश्चाद्बीजानामुपरि प्रिये ।। ४ ।। एवं कृत्वा तु संपूज्य तत्रैव कुसुमैः शुभैः । याममात्रेण सा नारी समायाति न संशयः ।। ५ ।। यन्त्रं श्रीकामराजाख्यं देवानामपि दुर्लभम् ।। ६ ।।

ललनाकृति कामराजयन्त्रम्




इति यन्त्रचि० ललनाकृति श्रीकामराजाख्यं यन्त्रम् ।। ४ ।।

---

यन्त्रराज बड़ा दुष्कर है विना अधिकारीके दूसरेसे कभी न कहे। दाहिने हाथ की अनामिकाके रुधिरसे वाम हाथकी हथेलीपर एक त्रिकोण यन्त्रको लिखे और उस यन्त्रके भीतर तीन लकीरें खींचे, प्रथम लकीरमें ओं, ह्रीं, क्लीं, इन तीन बीजोंको, दूसरी पंक्तिमें तिं, हां, स्वाहा इन चारवर्णोंको और तीसरी पंक्तिमें साध्यव्यक्तिके नामाक्षरोंको लिख गन्ध पुष्पादिसे पूजन करे, तो साध्यास्त्री एक पहरमात्रमें आकर्षित होगी अर्थात् स्वयं प्राप्त होगी। इसमें किसी प्रकारका सन्देह नहीं है। यह श्रीकामराज यन्त्र देवताओंको भी दुर्लभ है ।। १–६ ।।

इति श्रीयन्त्रचिन्तामणिकी चौथी पीठिकाके आकर्षणाधिकारमें कामराज नामवाला चौथा यन्त्र ।। ४ ।।

श्रीशिव उवाच ॥ अथातः संप्रवक्ष्यामि यन्त्रं वै देवमातृकम् । कर्षणं नरनारीणां शृणु देवि महाफलम् । ११ ॥ लाक्षारसं हरिद्रां च मञ्जिष्ठं भूर्जपत्रके । लेखनीयं प्रयत्नेन एकान्ते

देवमातृकं चक्रम्




यन्त्रमुत्तमम् ॥ २ ॥ मध्ये नाम लिखित्वा तु त्रिकोणं वेष्टयेत्ततः । तच्चापि वेष्टयेत्पश्चात् वर्तुलं यत्नतः प्रिये ॥ ३ ॥ तस्योपरि स्वरा लेख्या अकाराद्यास्तु षोडश । ततस्तद्वेष्टयेत्सम्यग्रेखया नेत्रसंख्यया ॥ ४ ॥ तस्यैव पादधूल्याऽथ प्रकुर्याच्छालभञ्जिकाम् । तस्या योनौ तु संक्षिप्य यन्त्रराजं सुपूजितम् ॥ ५ ॥ एवं कृते

---

श्रीशिवजी बोले—हे देवि ! नर और नारियोंके आकर्षणकारक, महाफलदायक देवमातृक यन्त्रको कहता हूँ, सुनो—लाखका रस, हल्दी, मंजीठ इन वस्तुओंको एकत्रित करके भोजपत्रके ऊपर त्रिकोणयुक्त एक गोलाकार चक्र खींचकर फिर एक अंगुलके अन्तरसे एक और गोलाकार चक्र दो रेखाओंसे युक्त कर खींचे। फिर त्रिकोणके भीतर साध्यव्यक्तिके नामाक्षरोंको लिखकर अकारादि सोलह स्वरोंको दोनों गोलाकारोंके भीतर लिखे। पुनः उक्त साध्यव्यक्तिके चरणके नीचेकी धूलि लाकर एक पुत्तलिका बनाकर सुपूजित यन्त्रराजको योनि (भग) में स्थापित करे। ऐसे करने पर आकर्षित हो साध्य व्यक्तिको प्राप्त होगी। इसमें किसी

---

१. पादधूल्या सहान्यमृत्तिकया जलेन च मूर्ति विधायेत्यर्थः ॥

तु कृष्टा सा समायाति न संशयः। बहुनाऽत्र किमुक्तेन स्वपत्या सममानयेत् । यन्त्रराजो महागोप्यो देवमातृकसंज्ञकः ६

इति श्रीयन्त्रचिन्तामणौ मानिन्याकर्षणं देवमातृकं पञ्चमं यन्त्रम्।।५।।

चिन्तामणौ कल्पवरे सुकल्पे श्रीचन्द्रचूडस्य मुखाद्विनिर्गते । तस्मिश्चतुर्थी किल पीठिकामिमां चकार दामोदरविप्रवर्यः ।। १ ।। आकर्षणं नाम महाधिकारं पूर्णं द्वितीयं हि महाप्रभावम् । पञ्चैव यन्त्राणि महाप्रभावे रहस्यभूतानि तु कीर्तितानि ।। २ ।।

अथ स्तम्भनाधिकारः

नारायणीति निगदन्ति सदैव लोका यां विश्वमातरमिति

---

प्रकारका संदेह नहीं । विशेष कहनेसे क्या, चाहिये पतिसहित प्राप्त होगी, इस देवमातृक संज्ञक यंत्रको अत्यन्त गुप्त रखना चाहिये ।। १–६ ।।

इति श्रीयंत्र० नरनारी आकर्षण० मातृसंज्ञक पांचवां यन्त्र।।५।।

———

श्रीशिवजी महाराजके मुखारविन्दसे निकले कल्पश्रेष्ठ चिन्तामणि नाम कल्पकी चौथी पीठिका इस प्रकार दामोदरजीने की है।। १ ।। महाधिकार और महाप्रभावशाली आकर्षण नाम चौथा अधिकार, इस अधिकारमें पांचही रहस्यभूत आकर्षणयंत्र वर्णित हैं। ।। २ ।।

इति यन्त्रचिन्तामणौ आकर्षणाधिकारः ।।

जिसको तीनों लोक नारायणी इस सम्बोधनसे उच्चारण करते हैं, अन्यजीव जिसको विश्वमाता कहकर पुकारते हैं ऐसी गंधर्व,

प्रवदन्ति केचित् । गन्धर्वयक्षसुरसिद्धगणैः स्तुतां तां विश्वेश्वरीमभयदां त्रिगुणां नमामि ।। १ ।। संस्तम्भनं नाम महाधिकारं विचारयामोऽत्र तु पीठिकायाम् । यन्त्राणि बीजानि शृणुष्व देवि संस्तम्भनानि क्षणसिद्धिदानि ।। २ ।।

श्रीशिव उवाच ।। शृणु देवि महायन्त्रं स्तम्भनं सर्ववैरिणाम् । विवादे व्यवहाराणां मुखस्तम्भो भवेद्ध्रुवम् ।। १ ।। यदा कालवशाद्देवि कलहः संप्रजायते । तदा कुर्यान्महायन्त्रं जिह्वावेधनकं परम् ।। २ ।। रोचना भूर्जपत्रेण संलेख्यं सुविचक्षणैः । षट्कोष्ठकं प्रकुर्वीत रेखाद्वितयकेन च ।। ३ ।। कोष्ठमध्ये लिखेद्बीजं प्रतिकोष्ठमिहैककम् । हकारं च मकारं च लकारं तदनन्तरम् ।। ४ ।। वकारं च रकारं च यकारं च प्रतिष्ठितम् । ऊकारस्वरसंयुक्तं मस्तके रेफसंयुतम्

---

यक्ष, सुर, सिद्ध गणोंसे स्तुति की हुई अभयदान करनेवाली रजोगुण, सत्तोगुण, तमोगुणरूपा विशेप विश्वेश्वरी भगवतीको नमस्कार करता हूँ ।। १ ।। इस पंचमपीठिकामें स्तम्भन नाम महाधिकारका विचार किया जाता है—हे देवि ! क्षणमात्रमें सिद्धिके देनेवाले स्तंभनयंत्र और बीजोंको श्रवण करो ।। २ ।।

श्रीशिवजी बोले—हे देवि ! व्यवहार विवादमें सम्पूर्ण शत्रुओंके मुखस्तम्भनकारक यंत्रको सुनो ।। १ ।। हे देवि ! यदि संयोगवश कलह हो जाय तो जिह्वावेधन नामक यंत्रका प्रयोग करे ।। २ ।। विधान यथा-गोरोचनसे भोजपत्रके ऊपर दो रेखा षट्कोणयंत्रको लिखकर प्रतिकोणकी रेखाको त्रिशूल युक्तकरके अन्तरालमें ठकार बीजोंको लिखे तत्पश्चात् प्रत्येक कोणके भीतर ह, म, ल, व, र, य, इन सब वर्णोंको ऊपर नीचे स्थापितकर योजनापूर्वक अन्तमें ऊकार स्वरको मिलाकर बिंदु तथा रेफको ऊपर के भागमें लिखकर

॥ ५ ॥ बिन्दुमात्रार्द्धसंयुक्तं संयोगे वर्णषट्ककम् । स्वर-द्वितय संयुक्तं बिन्दुना परिभूषितम् ॥ ६ ॥ एवं संजायते बीजं मुखस्तम्भनसंज्ञकम् । कोष्ठे कोष्ठे तु संलेख्यमेकैकं बीजमुत्त-मम् ॥ ७ ॥ एवं बीजानि संलेख्य रेखाद्वितयकेन च । रेखो-परिगताःकृत्वा कोणदेशाश्चतुर्दिशम् ॥ ८ ॥ बाह्यरेखोर्ध्वधो लेख्यास्त्रिशूला मस्तकोपरि । सर्वतो रेखयाचान्ते त्रिशूलान् विलिखेत्क्रमात् ॥ ९ ॥ एवमष्टादशसंख्यास्त्रिशूलाः संप्रति-ष्ठिताः । शूलान्तराले सर्वत्र तथोपरि लिखेत्क्रमात् ॥ १० ॥ ठकारबीजानि षडेव चोर्ध्वमधोऽपि तावन्ति विलिख्य नूनम् । दिग्दक्षिणस्यां च तथा त्रिबीजं तावन्ति संख्यानि तथोत्तरे च ॥ ११ ॥ एवं हि बीजानि ठकारसंज्ञः श्रीसूर्यसंख्यानि

शत्रुमुखगतिर्मतिस्तंभनयन्त्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| | ठं | ठं | ठं | ठं | ठं | ठं | |
| | ह्रैं | ह्रैं | ह्रैं | ह्रैं | ह्रैं | ह्रैं | |
| ठं | मैं | मैं | मैं | मैं | मैं | मैं | ठं |
| | लैं | लैं | लैं | लैं | लैं | लैं | |
| ठं | वैं | वैं | वैं | वैं | वैं | वैं | ठं |
| ठं | रैं | रैं | रैं | रैं | रैं | रैं | ठं |
| | यूँ | यूँ | यूँ | यूँ | यूँ | यूँ | |
| | ठं | ठं | | ठं | ठं | ठं | |

ईकार स्वरको मिलाकर गंध पुष्पादि से विधिपूर्वक पूजनकर निश्चिन्त मन हो वक्ष्यमाण मन्त्रका जप करे। मन्त्र-ओं ह्रदल्ल्यूँ

विलिख्य पश्चात् । संपूज्य यन्त्रं विधितप्रयत्नतो जपेत्तु मन्त्रं मनसा सुनिश्चलः ।। १२ ।। ॐ ह्लल्र्यूं ललल्ल अमुकस्य मुखं स्तम्भय स्तम्भय ठः ५ स्वाहा ।। अष्टोत्तरं चैव शतं जपित्वा मन्त्रं त्रिसंध्यं त्रिदिनं प्रयत्नात् । संपूजयेद्यन्त्रवरं त्रिसंध्यं पीतैश्च पुष्पैः कनकावदातैः ।। १३ ।। एवं कृते शत्रुगतिं मतिं च संस्तम्भयेद्यन्त्रवरो हि नूनम् । मूढो महामूक इव प्रजायते ग्रस्तो ग्रहेणैव रिपुर्महोग्रः ।। १४ ।।

इति य० स्तम्भनाधिकारे शत्रुमुखगतिमस्तिस्तम्भनं नाम
प्रथमं यन्त्रम् ।। १ ।।

श्रीशिव उवाच ।। अथातः संप्रवक्ष्यामि यात्रास्तम्भनमुत्तमम् । शिलासंपुटके लेख्यं पीतद्रव्येण शोभनम् ।। १ ।। रोचनां हरितालं च हरिद्रां च मनःशिलाम् । कुङ्कुमेन समायुक्तं

---

ललल्ल अमुकस्य मुखं स्तम्भय२ठः ५ स्वाहा । सन्ध्याकालमें तीन दिनतक इस यन्त्रको अष्टोत्तरशत अथवा शत जपको यत्नपूर्वक करके त्रिसन्ध्या कालमें सुवर्णकी कांतिके समान पीले वर्णवाले फूलोंसे पूजन करे । ऐसा करनेसे शत्रुकी बुद्धि और गतिका स्तम्भन होता है और ग्रह ग्रसित समान होकर मूकभावको प्राप्त हो शान्त होता है । ।। १– १४ ।।

इति यन्त्र० पाँचवीं पी० स्तंभनाधि० शत्रुकी मुख
गतिस्तंभन प्रथम यन्त्र ।। १ ।।

---

श्रीमहादेवजी बोले–अब यात्रास्तम्भनकारक अति उत्तम यन्त्रको कहता हूँ । शिला संपुटके ऊपर पीले द्रव्यसे चतुष्कोण यन्त्रको लिखकर चारों कोनों तथा चारों दिशाओंमें एक एक त्रिशूल लिखकर मध्यमें दो रेखाकी कल्पना करे । प्रथम रेखामें, 'कुंभे

पीतद्रव्यं प्रचक्षते ॥ २ ॥ कुम्भे मोहे च बीजानि एक पंक्तौ लिखेन्नरः । तस्याप्यधो लिखेन्नाम मोहे चान्ते प्रतिष्ठितम् ॥ ३ ॥ ततस्तद्वेष्टयेत्सम्यक् चतुष्कोणंतु रेखया । कोणे कोणे त्रिशूलंतु मध्ये मध्ये तथैव च ॥ ४ ॥ कृत्वैवमष्टौ शूलानि यन्त्ररेखोपरि स्थितान् । संपूज्य पीतकुसुमैर्यन्त्रराजं मनोहरम् ॥ ५ ॥

यात्रास्तंभनयन्त्रम्

कुंभे मोहे

देवदत्तं मोहे

धूपैर्दीपैश्च नैवेद्यैर्नानाभक्ष्यसमन्वितैः । एवं संपूज्य तद्यन्त्रं भूमिमध्ये क्षिपेत्ततः ॥ ६ ॥ मृदापूर्य समे देशे यन्त्रस्योपरि यत्नतः । गमनं स्तम्भयत्येव नात्र कार्या विचारणा ॥ ७ ॥ यथारोपितभाण्डोऽपि न यात्येव प्रिये सदा ॥ ८ ॥

इति यं० यात्रास्तम्भनं नाम द्वितीयं यन्त्रम् ॥ २ ॥

---

मोहे' और दूसरी रेखामें साध्यव्यक्तिके सानुस्वार नामके अक्षर लिख अन्तमें मोहे इन दो वर्णोंको लिखे, अर्थात् 'देवदत्तं मोहे' इस प्रकार लिखे । गोरोचन, हरताल, हलदी, मैनशिल, कुंकुम, इनको पीले द्रव्य कहते हैं, फिर मनोहर यन्त्रराजका पीले फूलोंसे पूजनकर गन्धादि प्रदान करे और नानाप्रकारके भक्ष्य नैवेद्यादि को अर्पण करे । पृथ्वीके मध्यमें स्थापित कर यन्त्रके ऊपर मिट्टी डालकर बंदकर दे तो निश्चयही गमन रुक जायगा इसमें किसी प्रकारका सन्देह नहीं । हे प्रिये ! मार्गमें आरोपितभांडभी स्थितही रहेगा अन्यका तो कहना ही क्या है ॥ १–८ ॥

इति यन्त्रचि० पाँचवीं स्तम्भ० में यात्रास्तंभन कारकदूसरा यन्त्र।२।

श्रीशिव उवाच ।। अथातः संप्रवक्ष्यामि वाचः स्तम्भं च सुन्दरी । प्रतिवादिमुखस्तम्भं यन्त्रं ख्यातं तु भूतले ।। १ ।। पीतद्रव्येण संलेख्यं शिलासंपुटमध्यतः । रोचनां हरितालं च हरिद्रां च मनःशिलाम् ।। २ ।। कुंकुमेन समायुक्तं पीतद्रव्यं प्रचक्षते । मध्ये नाम लिखित्वा तु त्रिकोणं वेष्टयेत्ततः ।। ३ ।।

प्रतिवादिमुखस्तम्भनयन्त्रम्




ततस्तद्वेष्टयेत्सम्यग्वर्तुलं रेखयैकया । तस्योपरि दलान्यष्टौ प्रकुर्वीत ततः-परम् ।। ४ ।। दलमध्ये लिखेद्बीजं लकारं बिन्दु भूषितम् । एवं चाष्ट दलेः लेख्यं पूजयेत्कुसुमैः शुभैः ।।५।। पीतवर्णैस्तथा धूपैर्दीपैर्नैवेद्यकैः शुभैः । ब्राह्मणं भोजयेच्चैकं पायसेन गुडेन च ।। ६ ।।

---

श्रीशिवजी बोले—हे सुन्दरि ! अब वाणिस्तम्भनको कहता हूँ और यह यन्त्र प्रतिवादिमुखस्तम्भननामसे भूतलमें प्रसिद्ध है । विधान इस प्रकारसे है, पीले द्रव्यसे शिलासंपुटके मध्यमें त्रिकोण यन्त्रको लिखकर गोलाकार चक्रसे वेष्टितकर आठ दलसे सुशोभितकर उक्त त्रिकोणके भीतर साध्यव्यक्तिके नामके अक्षर और दलोंमें लं बीजोंको स्थापित करे । फिर पीले वर्णयुक्त सुगन्धिवाले पुष्प, धूप, दीप, नैवेद्यादिसे यन्त्रराजका पूजनकर पायस (खीर) तथा गुडमिश्रित पदार्थोंसे एक ब्राह्मणको भोजन

---

१—श्रीकर्णिकारं कुटजं चम्पकं स्वर्णकेतकीम्।धत्तूरं पीतकुसुमं नागकेशरमेवच।

ततो निखन्य भूमौ तु स्थापयेत् पूर्ववत्ततः । विवादे व्यवहारे च शास्त्रचर्चासु च प्रिये।। ७ ।। प्रतिवादि – मुखस्तम्भो जायते नात्र संशयः । एतद्यन्त्रं महादेवि सुगोप्यं कथितं तव ।। ८ ।।

इ० य० प्रतिवादिमुखस्तम्भनं नाम तृतीयं यन्त्रम् ।।३ ।।

श्रीशिव उवाच ।। अतः परं प्रवक्ष्यामि शत्रोर्वक्त्रस्य मुद्रणम् । यदा संजायते वादः शत्रुभिः सह सुव्रते ।। १ ।। तदा यन्त्रं प्रकुर्वीत सुगमं फलसिद्धिदम् । खट्टिकया तु संलेख्यं स्वभित्तौ वेगतः प्रिये ।। २ ।। मध्ये नाम लिखित्वा तु शत्रोस्तु विधि-

---

कराये। पृथ्वीको खोदकर विधानपूर्वक यन्त्रको स्थापित करके ऊपर मिट्टी डालकर वन्दकर दे तो व्यवहार, विवाद, शास्त्रचर्चा आदिमें प्रतिवादीके मुखका स्तंभन हो जायगा। हे देवि! यह परमगुप्त यन्त्र मैंने तुमसे कहा है। १– ८।।

इति यन्त्र० पाँचवीं० प्रतिवादिमुखस्तम्भन नामवाला तीसरा यन्त्र ।। ३ ।।

---

श्रीशिवजी बोले–हे सुव्रते ! शत्रुके साथ विवाद होनेमें शत्रुके मुखको वन्द करनेवाला यन्त्र कहता हूँ। हे प्रिये ! जिस समय शत्रुसे विवाद हो उसी समय शीघ्रसिद्धिके देनेवाले यन्त्रका प्रयोग करे। विधि–अपने स्थानकी दीवारके ऊपर खडिया मिट्टीसे गोलाकार चक्र खींचकर आठोंदिशाओंमें त्रिशूल लगाय यंत्रको निर्माणकर साध्यव्यक्तिके नामाक्षर लिखकर यंत्रका श्वेतपुष्प , फल, सुगन्ध,

---

ग्राह्याण्येतानि पुष्पाणि यथालाभं वरानने, अन्यानि पीतवर्णानि न ग्राह्याणि कदाचन ।

हे वरानने । कुटज, चम्पा, स्वर्णकेतकी, धत्तूरा, नागकेशर, पीतकुसुमके कथनमें इनके ही यथाशक्ति पीले फूल जितने मिलें उन्हें ग्रहण करना चाहिये अन्य नहीं ।।

